Proponent : *No, because it is for the (statement) of the object.* Therefore, said to be the objects of the three ; 'this I shall state' thus the authority starts. If the (mention) is not made, it is not known as to what is said to be the object of the three.

आह, एवमपि विषयग्रहणात्सिद्धेर्बाह्यग्रहणपार्थकमिति ।

Opponent : This is also accomplished through the mention of the word object, and the mention of the term external serves no purpose.

उच्यते–वक्तव्यं तावदिदमवश्यं विषयभावप्रतिपत्त्यर्थम् । तत्र शेषे वा यथान्यासं वोच्यमाने न कश्चिद्विशेषः । अथवा नेदं बाह्यसंज्ञाप्रतिपत्त्यर्थमारभ्यते, किं तर्हि नियमार्थम् । कथम् ? दशधा बाह्यं शब्दादिविषयग्रहणभूतमेव त्रयस्यापि विषयाख्यं यथा स्यात्, मा भूदन्तःप्राणादिभूतम् । अथवा दशधैव बाह्यम् । भेदविषयं बाह्यमित्यर्थः । प्राणादिभूतस्य तु भेदो नास्तीत्यदोषः ।

Proponent : It should necessarily be stated for the understanding of their being of the nature of object. Then, understanding it as the remainder or stating it as it is done involves no difference. Or, it is not stated for the understanding of the designation of external with reference to it. On the contrary, it is for restriction (or specification).[3]

How?

So that the ten kinds of external (organs) which have become knowledge (modified into the form) of object like word may be called the object of these and so that the internal (vital airs) in the form of vital air etc., should not be so. Or, (the statement should be understood as) the external are of ten kinds only. The sense is that external are the object causing differentiation (to be differently cognies). There is, however, nodifferentiationin the vital air, etc.[4] Thus there is no fault.

(External organs are objects of internal organs)

तदेतत्

**त्रयस्य विषयाख्यम् ।**

बुद्ध्यहंकारमनोलक्षणस्य हि त्रयस्योपात्तविषया बुद्धीन्द्रियकर्मेन्द्रियवृत्तयः सम्पर्काद्विषयरूपप्रत्यवभासनिमित्ततामुपगच्छन्त्यो विषयाख्यतां लभन्ते । तथा मनोऽहंकारावपि बुद्धे । बुद्धिस्तु निश्चयरूपत्वात्करणान्तरनिरपेक्षा सर्वमर्थं प्रवृत्तौ प्रति निश्चयरूपेणाऽध्यस्तं

पुरुषायोपसंहरति ।

तत्र शब्दादिसन्निधाने वृत्तीनां ताद्रूप्यापत्तेस्तदपगमे च ताद्रूप्यापगमात् प्राप्यकारि ।

**THAT IS SAID TO BE THE OBJECT OF THE THREE**

The functions of the organs of sense and the organs of action which have taken (the form of) the object and becoming the cause of apprehension or assuming the form of the object through their contact (with the object and the internal organs) get the (name 'object' of the internal organs).[5] Similarly, the mind and the egoism also (become the object) of intellect. However, intellect which does not require any other organ on account of its being of the form of determination submits to the conscious entity all the objects superimposed on it in the form of determination towards activity.

They attain the object because their function attains the form of the objects in the contact of the object, and with the cessation of that (contact) their attaining the form of that also comes to an end.

(The external organs act at present only while
the internal at the three points of time)

**साम्प्रतकालं बाह्यम् ।**

उपात्तविषयेन्द्रियवृत्तिसन्निधानात्तु तदाकारसंस्काराधाननिमित्तस्मृतिप्रत्ययवशात्

**त्रिकालमाभ्यन्तरं करणम् ॥ ३३ ॥**

**THE EXTERNAL ORGANS ACT AT PRESENT TIME ONLY.[6]**

Due to having the knowledge in the form of memory which is caused by the impression of form brought about by the contact of the function of the senses which has brought (or attained the form of the object): –

**THE INTERNAL ORGANS (ACT) AT ALL THE THREE POINTS OF TIME.**

# KĀRIKĀ 33

1. This is the reason as to why they are called internal.
2. If the three are understood to be the first three in the order of enumeration, ear may be wrongly understood as the internal organ because the author discusses the intellect in the 23rd kārikā, egoism in the 24th and 25th and proceeds to enumerates the sense-organs in the 26th kārikā as ear, skin, eye, tongue and nose. If the first three of all these are understood as internal organs, the enumeration would cover intellect, egoism and the ear. Thus, ear would undesirably fall under the internal organs.
3. I.e., the restriction to the external organs excludes the vital airs, as it is discussed further.
4. The external organs are differently cognised, while the vital airs are not cognised so.
5. Here, it should be observed that the statement refers primarily to the sense-organs and secondarily to the organs of action which help the sense-organs in bringing the object within their reach.
6. It is because they act only after coming in contact with the object.

# KĀRIKĀ 34

(Objects of organs of sense)

आह, प्राक्छब्दादिषु श्रोत्रादीनामालोचनमात्रं वृत्तिरित्यविशेषेणोक्तम् । तत्र किं तथैव प्रतिपत्तव्यमथेन्द्रियाणां विषयविशेषोऽस्तीति ? अथ चोक्तं कार्यं च तस्य दशधा विशेषलक्षणमविशेषलक्षणं च । तत्र केन करणेन कस्य विषयस्य ग्रहणमिति ?

Opponent : It is stated in general earlier that the function of the ear, etc., with reference to the sound, etc., is the mere apprehension[1] In that context should it be understood as it is, or as the object of the senses is the particular object only? And, it is also stated that the object (operated) is also of ten kinds : specific as well as non-specific. Then which object is cognised by which organ?

उच्यते–

**बुद्धीन्द्रियाणि तेषां पञ्च विशेषाऽविशेषविषयाणि ।**

तेषां पूर्वोक्तानामिन्द्रियाणां यानि बुद्धीन्द्रियाणि पञ्च श्रोत्रादीनि तानि विशेषाऽविशेषविषयाणि प्रतिपत्तृभेदेन । तत्र देवानां यानि इन्द्रियाणि तानि धर्मोत्कर्षाद्विशुद्धान्यविशेषानपि गृह्णन्ति प्रागेव विशेषात्, योगिनां च संप्राप्तविशेषाणाम् । अस्मदादीनां तु विशेषानेव तमसा परिवृतत्वात् ।

Proponent : OF THESE, FIVE ARE THE SENSORY ORGANS ; THESE HAVE THE SPECIFIC AND NON-SPECIFIC THINGS AS THEIR OBJECTS.

Out of those organs mentioned above the five sensory organs have specific as well as non-specific things as their objects, due to the differentiation of the cogniser.[2] The senses of the gods are pure due to the dominance of Sattva in them (and as such) cognise the non-specific also even earlier to cognising the specific, and the senses of the yogins having cognised specific objects cognise non-specific too. The senses of the beings like us cognise specific objects only since they are covered (or dominated) by Tamas.[3]

(Objects of organs of action)

आह, किं कर्मेन्द्रियाणामपि प्रतिपत्तृभेदाद् ग्रहणभेदो भवति ?

Opponent : Is there the difference of operation due to the difference of the cogniser in the case of the organs of action also.

नेत्युच्यते । किं तर्हि सर्वेषामेव

**वाग्भवति शब्दविषया ।**

वागिन्द्रियस्य वाय्वभिहतेषु वदनप्रदेशेषु ताल्वादिषुउध्वेनेर्वर्णपदवाक्यश्लोकग्रन्थभावेन विकारापादनं सर्वप्राणिनामविशिष्टम् ।

Proponent : No, on the contrary, of all :

**SPEECH HAS SOUND AS ITS OBJECT**

The attainment of the modification by the sound in the form of letters, word, sentence, verse and book in the parts of body striking the air, like palate, etc., is the function of the organs of speech, common to all.

आह, अथेतराणि कर्मेन्द्रियाणि कथमिति ?

How are the rest of the organs of action?

उच्यते–

**शेषाण्यपि पञ्चविषयाणि ॥ ३४ ॥**

पाणिपादपायूपस्थास्तु आदानविहरणोत्सर्गानन्दलक्षणैः कर्मभिः शब्दस्पर्शरसरूपगन्धसमुदायरूपा मूर्तीर्विकुर्वन्तीति ।

Proponent : THE REST ALSO HAVE THE FIVE OBJECTS AS THEIR OBJECTS.

The hand, feet, anus and the generative organ affect the form which is the combination of word, touch, taste, form and handling, walking, excretion and gratification.

(The acts of organs of action are not restricted)

आह, यदि पञ्चविषयाण्येवाऽविशेषाणीति नियमोऽभ्युपगम्यते तेनैकैकरणेष्वादानादिक्रियाऽनुपपत्तिप्रसंग इति ।

Opponent : If the rule that their objects are commonly five objects only is admitted, there will arise the undesirable contingency of

the impossibility of the act of handling etc., in the organs individually.

उच्यते न, नियमप्रतिषेधार्थत्वात्। स्वविषयनियमो बुद्धीन्द्रियवत्कर्मेन्द्रियाणामपि मा विज्ञायीत्यतो नियमप्रतिषेधार्थमिदमारभ्यते। तदर्थमेव चापिशब्दमाचार्योऽधिजगे। सम्भावनाऽर्थमपि च पञ्चविषयाण्येतानि प्रागेव तु चतुस्त्रिविषयाणीति।

Proponent : No, because it is for the purpose of negating such a rule. The restriction to the own object may not be understood in the case of the organs of action, as it is found in the case of the organs of sense–hence, the present discussion commences to negate the restriction. For that purpose only the authority has uttered the word 'also'. It also indicates possibility, viz., it has these five objects meaning that it has four or three (also) like the previous one.

(The objects in operation are not non-existent or unreal)

आह, कथमेतदवगम्यते विशेषाविशेषविषयाणीन्द्रियाणि, न पुनरसद्विषयाणि इति ?

Opponent : How is it known tha' ˏ senses have the specific and non-specific object, and they are not having non-existent objects as their objects?

उच्यते– विशेषाणामसत्त्वाऽसिद्धेः। प्रत्यक्षतस्तावद्विशेषा उपलभ्यन्ते। तस्मादेषामसत्त्वमशक्यं प्रतिज्ञातुम्। अथापि स्यात्साध्यमेतत्प्रत्यक्षमेवैतदनवद्यम्, बाह्यवस्तुविषयमयमृगतृष्णिकादिविज्ञानवत्प्रत्यक्षाभासम्। एतच्चायुक्तम्। कस्मात् ? विकल्पानुपपत्तेः। सर्वमभूतमभ्युपगन्तव्यम्। यत्रो नास्ति किंचिद् भूतार्थेन प्रत्यक्षं यदपेक्ष्येतरत्। प्रत्यक्षाभासं स्यात्। उक्तस्त्वयं विकल्पः। तस्मादयुक्तं ज्ञानमात्रमिदमिति। किं चान्यत्। विपरीतदर्शनप्रसंगात्। मृगतृष्णिकास्वप्नविषयैरसद्भिः सतामसत्त्वमिच्छतस्तद्वदेव विपरीतदर्शनप्रसंगः। तथा हि गन्धर्वनगरादिषु कदाचित्तमेवार्थं गां पश्यति, कश्चिद् गजं पश्यति, कदाचित्पताकाम्। स्वप्ने चैकमूर्तिपतितानां गोपुरुषाश्वरासभनदीवृक्षप्रभृतीनां दर्शनं स्मरणे विपर्ययेण दृष्टम्। तथा वातायनेन हस्तियूथप्रवेशने____। विच्छिन्नानां चावयवानां पुनः सन्धानं आकाशगमनमनीश्वरस्यानिमित्तं राज्यलाभ इति। तदितरत्रापि स्यात्। न त्वस्ति। तस्मादयुक्तं मृगतृष्णिकास्वप्नादिवदसत्त्वं भावानाम्। अर्थक्रिया च न स्यात्। यथा स्वप्ने स्नातानुलिप्ताशितपीतवस्त्राच्छादितानामफलत्वं दृष्टम्, एवमिहापि स्यात्। शुक्रविसर्गवदिति चेत्, स्यादेतत्– यथा द्वयसमापत्तिपूर्वकः शुक्रविसर्गः स च तदभावेऽपि स्वप्ने भवति, एवमितरत्स्यादिति। तदयुक्तम्, रागादिनिमित्तत्वात्। तथाहि जाग्रतोऽपि तत् द्वयसमापत्तिमन्तरेण भवति। तस्मान्मनोरञ्जनानिमित्तं तत्। प्रेतवदिति चेत स्यादियं मम सद्बुद्धिः, यथा प्रेतानाम-

सद्भिःपूयनद्यादिभिरर्थक्रिया, नरकपालैश्च बाधनम्। एवमत्रापि स्यादिति। तदयुक्तम्। असिद्धत्वात्। न ह्येतदसदिति सिद्धम्। किंच प्रत्यक्षेण चाप्रत्यक्षबाधनात्। इह प्रत्यक्षं बलीय इत्यप्रत्यक्षस्य तेन प्रत्याख्यानमुपपद्यते। भवन्तस्त्वप्रत्यक्षेण प्रत्यक्षं प्रत्याचक्षते। तस्मादयुक्तं नरकपालादिवदसतामर्थक्रियेति। स्वभावभेदात्तदसत्त्वमिति चेत्, स्यादेतत्–यदि परमार्थतो नरकपालाः स्युस्तेषामपि दुःखसम्बन्धः स्यात्, मूर्तिमत्त्वाविशेषात्। न तु तेषां बाधाऽस्ति। तस्माद् भ्रान्तिरसाविति। एतदयुक्तम्। कस्मात्? कर्मशक्तिवैचित्र्यात्। प्रत्यक्षमेव तावत्कर्मनिमित्तो वाग्बुद्धिस्वभावाहारविहारशक्तिभेदभिन्नो विचित्रः संसार उपलभ्यते। स निपुणमवेक्षितुमशक्यः, गम्भीरत्वात्। किं पुनरप्रत्यक्षकर्मणां विपाकवैश्वरूप्यमतर्कगोचरमस्मदादिबुद्धयः परिच्छेत्स्यन्ति? तस्मान्मनोरथमात्रमेतत्। धर्माऽधर्मानुपपत्तिश्च स्यात्। यथा स्वप्ने ब्रह्महत्यासुरापानागम्यगमनादीनामफलत्वम्, एवमितरत्रापि स्यात्, असदविशेषात्। मिद्धोपघातात्तद्विशेष इति चेत् न, अविशेषात्। असत्त्वे तुल्ये क्वचिदुपघातः क्वचिन्नेतीच्छामात्रमेतत्। एवं चेत् नासन्तः पृथिव्यादयः। न चेदसन्तो युक्तमुपदिष्टं बुद्धीन्द्रियाणि तेषां पञ्च विशेषाविशेषविषयाणीति ॥३४॥

॥ इति श्रीयुक्तिदीपिकायां सप्तममाह्निकम् ॥

Proponent : *Because the non-existence of the specific objects is not established.* The specific objects are directly cognised. Therefore, it is impossible to recognise (or establish) their non-existence.

It may also be argued that it is still to be proved that it is the true perceptive knowledge only without some fault (in it), it may be apparent perception like the knowledge in mirage, etc., which also have the external object and appears like perceptive knowledge.

This is also wrong.

Why?

*Because the alternative (of real and unreal) would not be impossible.* Everything should be (in that case) admitted to be non-existent (i.e., without essence); because there in no perception of anything as real from the viewpoint of which the other may be the apparent perception. The alternative is, however, already discussed. Therefore, it is wrong that this (object) is merely of the form of knowledge. Moreover, because there would arise the undesirable contingency of opposite (or contradictory) knowledge always. In case of the one who believes in the non-existence of the existents through (on the analogy of) the non-existent objects like mirage and dream, there arises the undesirable contingency of opposite (or perverted) knowledge always like that of the non-existent objects. For example, in the case of city of the gandharvas, etc., one perceives the same objects sometimes as a cow, sometimes as an elephant and some-

times as a flag. The perception, in the dream, of cow, man, horse, donkey, river and tree, etc., in a single form is observed to take place in the opposite way in the memory of that afterwards. for example, in case of the entrance of a group of elephants through window[4]..... the joining of the broken parts of the body, going through the sky and the attainment of the kingdom by the incapable person without cause, etc. That would be the case elsewhere also. This is, however not so. Therefore, it is wrong that the objects are non-existent like the mirage and dream. *And there would not have been the action with some purpose.* As the futility of the acts in case of persons who have bathed, applied ointment, eaten, drunk and covered themselves with clothes in dream, similar would be the case here. If it is argued that it would be like the discharge of semen? It may be like this. Just as the discharge of the semen caused by coming together of the couple, takes place without that in the dream, the same may be the case elsewhere as well. That is wrong, because it (discharge of semen) is caused by attachment, etc. Similarly that takes place ever without coming together of the couple in case of waking persons also. That is why that is not caused by mutual process. If it is like a ghost? It may be like this. The contention of mine may be right. As there is the purposeful activity of the ghosts with the river of the purbulent water, etc., which are non-existent in nature, and also their being with the skull of a man, similar may be the case here. That is also wrong because it is not established. It is not established that those (objects) are non–existent.[5] Moreover, because the non-perceptible is obstructed with the perceptible. Here, the perception is more powerful, and hence, the negation of the non-perceived is possible through that. In your case, however, the perception is negated through non-perception. Therefore, it is wrong to say that there is purposeful activity of the non-existent like that of the human-skull, etc. If it is argued that their non-existence is due to the difference of nature (from the existent worldly objects)? It may be like this. If the human skulls would really exist, their association with the misery would also be there because they are not different from those possessed of form. There is, however, no obstruction in them. Therefore, this is also wrong.

Why?

Because of the difference of the power of the acts. The world casued by actions is directly perceived to be differentiated due to the difference in power of speech, knowledge, nature and character (lit. acts of eating and going). It is impossible to see it thoroughly, be-

cause of its depth. How will then the intellect of the people like us thoroughly know the different objects of the world caused by variegated fruits of acts, which is not directly perceived, and which is beyond the approach of logic. Therefore, it is merely a wishful thinking. Moreover, there would be impossibility of virtuous and vicioius deeds. As there is no result of the killing of a Brahmin, drinking wine and cohabitting and prohibitted lady, etc., in the dream, same would be the case elsewhere also because non-existence of the objects is common in both the cases. If it is argued that the difference is caused by the assault of sloth (in the dream),the reply is, no, because it is common. When the non-existence in common it is only a wishful thinking as to the assault is effective at some places and not at the others. If it is so, earth, etc., are non-existent. If these are non-existent, it is rightly stated that out of these organs five are the sensory organs, these have the specific and non-specific things as their objects.

Here ends the seventh discourse in the Yuktidīpikā.

# KĀRIKĀ 34

1. The sense is that the objects of the sense-organs are not specified. Now, the question naturally arises whether all the senses act upon all the objects or there is some specification.

2. The term viśeṣa stands for gross objects while aviśeṣa denotes subtle elements. The former are cognised by the ordinary wordly people while the latter are cognised by the gods and yogins. This is explained in the subsequent lines.

3. It is not that the senses about in tamas, but the text means that the senses of human beings have got more tamas than those of gods.

4. Here some portion of the text is missing.

5. It proves the belief of the Sāṁkhyas in super natural objects, ghosts, ect.

# KĀRIKĀ 35

(Relation of warder and gates between the internal and external organs)

द्वारिद्वारभावमेषामिदानीं वक्ष्यामः। तत्र बाह्यं करणं द्वारम्, अन्तःकरणं द्वारीति

Now we shall speak of the relation of warder and the gate in them. Here, the external organ is the gate and the internal organ, a warder.

आह, करणाऽविशेषादयुक्तम् अन्तःकरणस्य हीन्द्रियाणां च करणत्वमविशिष्टम्। तत्र को हेतुरन्तःकरणं द्वारि, द्वाराणीन्द्रियाणीति ?

Opponent : It is wrong because of their commonness as the organs. The nature of being organ is in case of both the internal organ and the other senses. Then, what is the reason here that the internal organ is the warder and the (external) senses are the gates ?

उच्यते–

**सान्तःकरणा बुद्धिः सर्वं विषयमवगाहते यस्मात्।**
**तस्मात् त्रिविधं करणं द्वारि द्वाराणि शेषाणि ॥ ३५ ॥**

सहान्तःकरणेन वर्तते या साऽन्तःकरणा बुद्धिः। अहंकारमनोभ्यां सहिता बुद्धिरित्यर्थः। अत्र चान्तःकरणग्रहणेनैव बुद्धेर्ग्रहणे सिद्धे भूयो बुद्धिग्रहणं प्राधान्यख्यापनार्थम्। भवति हि प्रधानस्य सामान्येऽन्तर्भूतस्यापि पृथगुपदेशः। तद्यथा

**जगाम तं वनोद्देशं व्यासः सह महर्षिभिः।**

इति महर्षिग्रहणे व्यासोऽप्यन्तर्भूतः प्राधान्यात्पृथगुच्यते, एवं साऽन्तःकरणा बुद्धिः सर्वं विषयमवगाहते, विशिष्टानविशिष्टांश्च शब्दादीन्सन्निकृष्टविप्रकृष्टव्यवहितान्प्रमाणबलेन स्ववृत्ते विषयीकरोतीत्यर्थः। एतदुक्तं भवति अनियतविषयो द्वारी, नियतविषयाणि द्वाराणि। तद्यथा प्रासादस्य पूर्वोत्तरदक्षिणपश्चिमानां स्वदिङ्नियमो न पूर्वमुत्तरं दक्षिणं पश्चिमं वा कदाचिद् भवति, तथेतराण्यपि द्वारीणि। तत्राऽनियताः सर्वदिगवस्थितैर्द्वारैः प्रवर्तन्त एवमिहापि श्रोत्रादीनि स्वविषयनियतानि। सान्तःकरणा तु बुद्धिः सर्वं विषयमवगाहते यस्तात् तस्मादनियतविषयत्वादुपपन्नमेतत्त्रिविधं करणं द्वारि, द्वाराणि शेषाणीति ॥ ३५ ॥

Proponent : SINCE THE INTELLECT ALONG WITH THE (OTHER) INTERNAL ORGANS ASCERTAINS (LIT. EXTENDS OVER) ALL THE OBJECTS, THEREFORE, THE THREE KINDS OF (INTERNAL) ORGANS ARE THE WARDERS AND THE REST ARE THE GATES.

The expression 'the intellect along with the internal organs' means intellect which is in association with the (other) internal organs. The meaning is 'the intellect along with the egoism and the mind.[1] Here, the mention of intellect is made through the mention of the internal organs yet the mention of the intellect again is to suggest its superiority. There is (found) the separate mention of the superior (even though it is) included in the common objects. For example, in the statement as 'Vyāsa with the (other) great seers went to the forest', Vyāsa who is also included in the mention of the great seers is mentioned separately on account of his superiority. Similarly, is (the expression that) 'intellect along with the (other) internal organs ascertains (i.e. extends over) all the objects'. The meaning is that it makes objects of its activity the word, etc., which are qualified or non-qualified, through the force of means of knowledge.[2] What is meant is this. The warder is that the objects of which are not fixed, and those whose objects are fixed are gates. As in case of a palace there is fixation of directions of its gates towards east, north, south or west. The same may be considered sometimes to east, north, south or west, as is the case with the other gates. There are activities through the doors situated, in all directions without restricting any. Similarly, here also the ear, etc., are restricted to their own objects. The intellect along with the internal organs, however, ascertains (or extends over) all the objects and, hence, since their objects are not fixed, it is right that the three (internal ) organs are the warder and the others are the gates.

## KĀRIKĀ 35

1. It suggests that the intellect decides the nature of the objects with the help of the egoism and mind.
2. The objects situated near are known through perception; those situated at a distance and beyond the sense-object contact are known through inference and those which are beyond the reach of them can be know through verbal testimony.

# KĀRIKĀ 36

(Mind and egoism submit the objects to intellect)

एते प्रदीपकल्याः परस्परविलक्षणा गुणविशेषाः ।
कृत्स्नं पुरुषस्यार्थं प्रकाश्य बुद्धौ प्रयच्छन्ति ॥ ३६ ॥

एते इत्यनेन त्रयमभिसम्बध्नाति श्रोत्रादीनामन्यतमं मनोऽहंकारश्च । प्रदीपकल्पाइत्यनेन प्रकाशसाम्यं करणपर्वण आचष्टे, यथा प्रदीपः प्रकाशक एवं करणमपि, तद्व्यापारे सति विषयाविर्भावानुपपत्तेः । परस्परविलक्षण इत्यनेन व्यस्तवृत्तिं पूर्वोक्तामाकर्षति । तया ह्येषां वैलक्षण्यमनुमीयते, आलोचनसंकल्पाभिमानभेदात् । गुणविशेषा इत्यनेनं सत्त्वादीनां पुरुषविज्ञानमुद्दिश्य तद्भावेन परिणामं ख्यापयति । कृत्स्नं पुरुषस्यार्थमिति विशेषाऽविशेषलक्षणं कार्यं आहार्यधार्यप्रकाश्यतया यथासम्भवं प्रकाश्य स्ववृत्त्यनुगुणं कृत्वा विषयत्वमापाद्येत्यर्थः । बुद्धौ प्रयच्छन्ति बुद्धावादधति । एतदुक्तं भवति–यदा श्रोत्रादीनामन्यतमं करणं शब्दादौ विषये प्रवर्तते तदा तद्द्वारेणाहंकारो मनो वा तं विषयं स्वव्यापारेणानुभूय बुद्धावाधत्ते, तद्विषयतामापादयतीत्यर्थः । कदाचित्तु बुद्धिरेव बाह्यकरणसंकल्पाभिमानान्निश्चिनोति विषयं, कदाचित्संकल्पाभिमानान्निश्चिनोति विषयं तावत्कदाचित्संकल्पाभिमानगृहीतम् । सर्वथा त्वयं शास्त्रार्थो येन वा तेन करणेन विषयमुपात्तं बुद्धिरध्यवस्यति । तया चाध्यवसायरूपापन्नया चेतनाशक्तिरनुगृह्यते । न करणान्तरस्य पुरुषेण सम्बन्धोऽस्ति । ततश्च द्वारिणां बहुत्वाद्दर्शनविशेषस्वातन्त्र्यसमुच्चयान्तःकरणपुरुषकर्तृत्वदोषाणामप्रसंगः ॥ ३६ ॥

**THESE (THE CONCERNED EXTERNAL ORGAN, MANAS AND THE EGOISM) MUTUALLY DIFFERENT, (DISTINCT) MODIFICATIONS OF THE THREE CONSTITUENTS, AND RESEMBLING A LAMP (IN RESPECT OF THEIR FUNCTIONS) ILLUMINING THE ENTIRE PURPOSE OF THE PURUSA PRESENT IT TO THE INTELLECT.**

Through the expression 'these' the author relates the three–one of the ear, etc., mind and egoism. Through the statement of the resemblance to the lamp the author speaks of the similarity of illuminating resting in the phase of the senses. As the lamp is the illuminator so is an organ because with the function of that (organ) the production of the object is impossible. Through the expression 'mutually distinct' the author draws here respective distinct function

of an organ mentioned above. Through that (separate function) only is inferred their distinction on account of the distinction of (mere) grasping, pondering over and I-notion. Through the expression modification of the constituents , the author suggests that they (the constituents) modify in their (present) form with the purpose of fulfilling (or with a view to) the purpose of the conscious entity. The meaning is that after illuminating, i.e., after making as for as possible an object of knowledge through the respective specifice and non-specific acts in the form of 'to be grasped' to be retained , 'to be illumined' the entire purpose of the conscious entity they submit it to the intellect i.e., put (the form) on the intellect . When any one of the (external) organs like ear proceeds to the objects like word, the mind as well as egoism experiencing the object through the former (i.e., operation of the senses) put its form upon the intellect i.e., make it the object of intellect. Sometimes the intellect ascertains the objects through the external object, pondering (i.e. desiring) and the relation to I-notion; sometimes it ascertains through pondering over (desiring and I-notion), while sometimes (it ascertains) the pondering (desiring) and the I-notion . The meaning always in the scripture is that the intellect ascertains the object presented to it by any of the organs. The power of consciousness is favoured by that intellect after the latter has attained the form of ascertainment.[1] There is no (direct) relation of any other organ with the conscious entity. And through this theory on account of the multiplicity of the gate-keepers there does not arise the undesirable contingency of involvement of defects/like the rise of particular knowledge independently (conscious entity), blending together of knowledge at a time and admitting the agency in the complex of internal organs and conscious entity.

## KĀRIKĀ 36

1. The act of attaining the form of the object in the case of the conscious entity is apparent or attributed and not real.

# KĀRIKĀ 37

(Mind and egoism come in contact of the conscious entity indirectly)

आह, कः पुनरत्र हेतुर्येन द्वारित्वाविशेषे सत्यहंकारमनसी बुद्धौ विषयाधानं कुरुतो न पुनरनयोः साक्षात्पुरुषेण सम्बन्ध इति ?

What is the reason that even though the nature of being warder is common (to egoism and mind), yet they put the form of the object upon the intellect only and there is no direct relation (of them) with the conscious entity?

उच्यते —

**सर्वं प्रत्युपभोगं यस्मात् पुरुषस्य साधयति बुद्धि ।**

अहंकारमनसोर्हि, नास्ति निश्चयरूपता, संकल्पाभिमानमात्ररूपत्वात् । अनिश्चितविषयया च करणवृत्त्या पुरुषस्य सन्बन्धोऽनर्थकः स्यात् । स्वयं वा निश्चेतुरस्य कर्तृत्वं स्यात् । ततश्चाऽऽमिश्रनिश्चयकारणत्वादयमप्यामिश्ररूपः स्यात् । सर्वं चैतदुक्तोत्तरं निश्चयरूपा हि बुद्धिः । अतस्तद्वृत्त्युपनिपाती विषयः सन्निधानमात्रात्पुरुषेण संचेतितो नास्यौदासीन्यं बाधितुमुत्सहते, नो खल्वप्यानर्थक्यमनुषज्यते । एतदुक्तं सर्वं प्रत्युपभोगं यस्मात्पुरुषस्य साधयति बुद्धिरिति ।

**BECAUSE THE INTELLECT ACCOMPLISHES THE EXPERIENCE OF THE CONSCIOUS ENTITY IN RESPECT OF ALL THE (OBJECTS).**

The egoism and mind are not of the form of ascertainment because they are of the nature of pondering (desiring) and I-notion only. The relation of the conscious entity with the function of the organs the object of which is not fixed would serve no purpose.[1] Or, there would be the activity in conscious entity if it ascertains the objects by itself.[2] Then, on account of its being the cause for the mixed ascertainment (the ascertainment of the complex object) it would also be of a mixed (comlex) form (nature).[3] To all this the reply is already given that the intellect is of the form of ascertainment. Therefore, the object which follows the function of the transformation (of the organs) is made known to the conscious entity merely through

proximity and thus it does not tend to disturb (obstruct) its neutrality, nor does it cling to purposelessness. Thus is explained 'because the intellect accomplishes the experience of conscious entity with respect to all the objects'.

(Intellect discriminates between cosmic matter and conscious entity)

आह, एवमपि शब्दादिलक्षणो विषयः प्रकृतः, स च बुद्ध्या सर्वः प्रतिपाद्यते। तत्र विषयान्तरमप्यस्ति प्रधानपुरुषान्तरलक्षणम्। तथाचाहुः। "उपभोगस्य शब्दाद्युपलब्धिरादिः गुणपुरुषोपलब्धिरन्तः"। तस्मात्तत्प्रतिपत्त्यर्थं करणान्तरं वक्तव्यमिति।

Opponent : In this way also only the object like word which is undertaken for discussion, is completely known by intellect. There is, however, another object in the form of the distinction between the cosmis matter and the conscious entity. It is stated also–'the beginning of the experience is the knowledge of the word, etc., and culmination (of it) is the knowledge of the constituents and the conscious entity. Therefore, some other organ should be mentioned for the knowledge of that (discriminative knowledge of conscious entity and the constituents).

उच्यते– न वक्तव्यम्। किं कारणम् ? यस्मात्

**सैव च विशिनष्टि पुनः प्रधानपुरुषान्तरं सूक्ष्मम् ॥ ३७ ॥**

यतो यस्मात्कारणात् सा बुद्धिरेव हि काष्ठापन्नेन तमसाऽभिभूतत्वाद्धर्मादीनां सत्त्वधर्माणां प्रकृतिभूतान्विकारभूतान्परतन्त्रानुपकार्यानुपकारकानचेतनान्संसर्गिधर्मिणश्च गुणानात्मत्वेनाऽध्यवस्य पुरुषायोपहरित। स च मिथ्याज्ञानाभ्यासवासनाऽनुरञ्जितं बुद्धिप्रत्ययमनुरुध्यमानो दर्शितविषयत्वात्तथैव प्रतिपद्यते। यदा तु धर्माद्यभ्यासात्तमोरूपापगमे सत्युत्तरोत्तराणां सत्त्वधर्माणामुत्कर्षस्तदा विनिवृत्तमिथ्याप्रत्यया वृत्तिः। न प्रकृतिविकारभूतः स्वतन्त्रोऽनुपकार्योऽनुपकारकश्चेतनोऽसंसर्गधर्मा च। ततो विपरीताश्च गुणा इति शुद्धाध्यवसायं करोति। पुरुषश्च परोपहृतवृत्तित्वात्तथैव प्रतिपद्यते। तदेतद् गुणानां पुरुषस्य चान्तरं द्वयोरपि निश्चयस्वभावत्वादस्मात्पूर्वोक्तधर्मभेदेऽपि सति सूक्ष्मं गम्भीरं दुर्ज्ञेयम्। अतश्च सूक्ष्म यद् बुद्धिमात्रमवलम्ब्य तदविशिष्टायाश्चेतनाशक्तेर्ग्राह्यग्राहक_____ ॥ ३७ ॥

Proponent : No, it should not be mentioned.

What is the reason here ?

Because:

**THAT (INTELLECT) ONLY DISCRIMINATES THE SUBTLE DIFFERENCE BETWEEN COSMIC MATTER AND CONSCIOUS ENTITY**

Since when the Tamas becomes intense and when virtue, etc., the qualities of Sattva, etc., are overpowered, the intellect itself after ascertaining the constituents (modifications of the constituents) which are actually the causes and effects, dependents, requiring assistance, assisting others, non-sentient and having the nature of mutual association, as the soul offers the (idea) to the conscious entity. The conscious entity also having past impression of the practice of perverted knowledge and confining himself to the knowledge of (given by) intellect understands in that way only because the object is presented to him.[4] When there is the gradual elevation of the qualities of the Sattva and the form of Tamas is removed through the repeated practice of virtue,etc., the function (of the intellect) becomes devoid of perverted knowledge. The intellect comes to have the pure right ascertaiment that (soul) is not the modification of the cosmic matter , is independent, requiring no favour or assistance, not assisting any other, sentient and having no nature of association ; and the constituents are opposed to that in nature.[5] Since the conscious entity is that to whom the function is presented by other (i.e. intellect), it knows it in this form only. The distinction between the conscious entity and constituents is subtle, deep and difficult to understand even though there lies the above difference because both the types of knowledge related to the conscious entity's identity to or difference from the constituents is of the nature of ascertainment.[6]

# KĀRIKĀ 37

1. If the conscious entity is supposed to come in contact with the senses directly, it would not get the form of the object in an ascertained form. Consequently, no one would have determined knowledge.
2. If the conscious entity is accepted to be a determining principle, it would be active and consequently non-eternal.
3. It would appear in the form of the object the form of which is attained by it. Consequently, it would be of many forms and whatever gets many forms is non-eternal.
4. This happens in the process of bondage.
5. It proves that the discriminative knowledge is located in the intellect, and is presented to the conscious entity.
6. Some portion of the text is missing at the end.

# KĀRIKĀ 38

(Phase of the objects)

व्याख्यातं करणपर्व। कार्यपर्वेदानीं वक्तव्यम्। तस्य च पुरस्तादुद्देशः कृतः - कार्यं च तस्य दशधा पञ्च विशेषा इति। साम्प्रतं तु निर्देशं करिष्यामः।

The subject of the organs is explained. Now, the subject of the effects should be stated.[1] That is mentioned by name earlier as the effects are ten– including the five specific (objects). Now we shall discuss them.

(Subtle elements are called non-specific)

आह, यद्येवं तस्मादिदमेव तावदुच्यतां के विशेषाः, केऽविशेषा इति।

Opponent : If it is so, it should be stated as to what are the specific and what are non-specific.

उच्यते–

**तन्मात्राण्यविशेषाः**

यानि तन्मात्राणि पञ्चाहंकारादुत्पद्यन्ते इति प्रागपदिष्टम्। ते खल्वविशेषाः,। कानि पुनस्तन्मात्राणीत्युच्यते शब्दतन्मात्रं, स्पर्शतन्मात्रं रूपतन्मात्रं, रसतन्मात्रं गन्धतन्मात्रमिति।

Proponent : THE SUBTLE ELEMENTS ARE NON-SPECIFIC.

The subtle elements are the same which are spoken earlier as those originating from the egoism.[2] They are indeed the non-specific.

What are those called subtle elements ?

To this the reply is–they are the subtle elements of sound, touch, form, taste and smell.

कथं पुनस्तन्मात्राणीति ?

Opponent : Why are these the subtle elements ?

उच्यते– तुल्यजातीयविशेषानुपपत्तेः अन्ये शब्दजात्यभेदेऽपि

सति विशेषा उदात्तानुदात्तस्वरितानुनसिकादयस्तत्र न सन्ति तस्माच्छब्दतन्मात्रम्। एवं स्पर्शतन्मात्रे मृदुकठिनादयः। एवं रूपतन्मात्रे शुक्लकृष्णादयः। एवं रसतन्मात्रे

मधुराऽम्लादयः। एवं गन्धतन्मात्रे सुरभ्यादयः। तस्मात्तस्य तस्य गुणस्य सामान्यमेवात्र, न विशेष इति तन्मात्रास्वेतेऽविशेषाः।

*Because there is no possibility of the further particularities of the same class.* Though there is no difference with reference to the genus in the case of many words, yet there (in the subtle elements) are no further particularities like high pitch, low pitch and circumplexed (which are found in gross words). Therefore, that is the subtle element of word. Similarly, (there is no) softness and hardness in the subtle element of touch. Similarly, (there is no) whiteness, blackness, etc., in the subtle element of form. Similarly, (there are no) sweetness and sourness in the subtle element of taste. Similarly, (there are no) good smell, etc., in the subtle element of smell. There is only the generality of that quality and not the particularity (of it) and thus there is no further particularity in the subtle elements.

(Gross elements are called specific and evolve from subtle elements)

आह, अथ के पुनर्विशेषा इति ?

Opponent : What are the specific (objects) then?

उच्यते—यानि खलु

**तेभ्यो भूतानि पञ्च पञ्चभ्यः।**

उत्पद्यन्ते

**एते स्मृता विशेषाः**

तत्र शब्दतन्मात्रादाकाशम्, स्पर्शतन्मात्राद्वायुः, रुपतन्मात्रात्तेजः, रसतन्मात्रादापः, गन्धतन्मात्रात्पृथिवी। तेभ्यो भूतानीत्येतावति वक्तव्ये पञ्च पञ्चयभ्य इति ग्रहणं समसंख्याकतस्तदुत्पत्तिज्ञापनार्थम्। तेनैकैकस्मात्तन्मात्रादेकैकस्य विशेषस्योत्पत्तिः सिद्धा। ततश्चयदन्येषामाचार्याणामभिप्रेतम् एकलक्षणेभ्यस्तन्मात्रेभ्यः परस्परानुप्रवेशादेकोत्तरा विशेषाः सृज्यन्त इति तत्प्रतिषिद्धं भवति। किन्तर्हि अन्तरेणापि तन्मात्रानुप्रवेशमेकोत्तरेभ्यो भूतेभ्य एकोत्तराणां भूतविशेषामुत्पत्तिः। तत्र शब्दगुणाच्छब्दतन्मात्रादाकाशमेकगुणम्, शब्दस्पर्शगुणात्स्पर्शतन्मात्राद् द्विगुणो वायुः, शब्दस्पर्शरूपगुणाद्रूपतन्मात्रात्त्रिगुणं तेजः, शब्दस्पर्शरूपरसगुणाद्रसतन्मात्राच्चतुर्गुणा आपः, शब्दस्पर्शरूपरसगन्धगुणाद् गन्धतन्मात्रात्पञ्चगुणा पृथवी। अत्र च वायोः शीतः स्पर्श अपां च, तेजस उष्णः, अनुष्णाशीतः पृथिव्याः। रूपं च शुक्लं भास्वरं च तेजसोऽपां च, कृष्णं पृथिव्याः। रसो मधुरोऽपाम्, साधारणः पृथिव्याः। गन्धस्तु पार्थिव एव तदवयवानुप्रवेशाद् भूतान्तरेषूपलभ्यते। इत्येते पृथिव्यादीनां धर्माः। अन्ये च परस्परानुग्राहकाः। के पुनस्त इत्याह—

आकारो गौरवं रौक्ष्यं वरणं स्थैर्यमेव च।
स्थितिभेदः क्षमा कृष्णच्छाया सर्वोपभोग्यते ॥
इति ते पार्थिवा धर्मास्तद्विशिष्टास्तथा परे।
जलाग्निपवनाकाशव्यापकास्तान्निबोधत ॥
स्नेहः सौक्ष्म्यं प्रभा शौक्ल्यं मार्दवं गौरवं च यत् ॥
शैत्यं रक्षा पवित्रत्वं सन्तानश्चौदका गुणाः ॥
ऊर्ध्वगं पावकं दग्धृ पाचकं लघु भास्वरम्।
प्रध्वंस्योजस्विता ज्योतिः पूर्वाभ्यां सविलक्षणम् ॥
तिर्यग्गतिः पवित्रत्वमाक्षेपो नोदनं बलम्।
रौक्ष्यमच्छायता शैत्यं वायोर्धर्माः पृथिग्वधाः ॥
सर्वतोगतिरव्यूहो विष्कम्भश्चेति ते त्रयः।
आकाशधर्मा विज्ञेयाः पूर्वधर्मविरोधिनः ॥
संहतानां तु यत्कार्यं सामान्यं ते गवादयः।
इतरेतरधर्मेभ्यो विशेषान्नात्र संशयः ॥

Those which are:

**FROM THESE FIVE THE FIVE GROSS ELEMENTS**

Proceed :

These (latter) are said to be specific.

There, the space proceeds from the subtle element of word; the air from the subtle element of touch; the fire from the subtle element of form; water from the subtle element of taste; and earth from the subtle element of smell. Inspite of the statement of that 'from those proceed the gross elements the mention' 'five from the five' is for the purpose of suggesting their production from the same number of object.[4] Therefrom is established the production of one gross element from one (a single) subtle. Therefore, the following view of the other seers that the succeeding specific (objects) proceed from the mutual combination of the subtle elements which are having single quality each, is negated. On the contrary, even without the combination of the subtle elements from the succeeding elements (subtle) is the origination of the succeeding specific element . The space having one quality proceeds from the subtle element of word, which has a single quality of word. The air having two qualities proceed from the subtle

element of touch which has the qualities of word and touch. The fire having three qualities proceed from the subtle element of colour which has the qualities of word, touch and colour. The water having four qualities proceeds from the subtle element of taste which has the qualities of word, touch, colour and taste. The earth having five qualities proceeds from the subtle element of smell which has the qualities of word, touch, colour, taste and smell.[5] Here the touch of air and water is cold, hot is the touch of fire, and of the earth the touch is neither hot nor cold. The colour also is white and bright in case of the fire and water and black in the case of the earth. The taste is sweet in case of the water and general in the earth. The smell belongs to earth only and is observed in the other elements due to the combination of the part of that (earth) in them.[6] These are the qualities of the earth, etc. The other qualities (than these) are for mutual favour.

What are those others ? To this the reply is :

Form, heaviness, roughness, covering, firmness, stability, partition, resistance, black shade are enjoyed by all, these are the qualities of the earth. Others are (not) endowed with them. Now you know the qualities which pervade water, fire, air and sky. Lubricity, fineness, splendour, brightness, softness, heaviness, coldness, protection, purification and continuous flow are the qualities of water. The light shoots upwards, is purifier, burner, cooker, light (as opposed to heavy), bright, destroyer and shining. It is, thus, different from others. The peculiar qualities of the air are transverse movement, purification, removing or throwing away, impelling, inspiring, roughness, going near, coldness. The qualities of the sky which are opposite to the qualities stated above should be known as the approach everywhere, non-obstruction and fixity. The collective effects of these are the general objects, cow etc. There is no doubt in it that they originate from the specific objects (having the qualities of each other).[7]

(Mutual favour in gross elements through qualities)

तत्राकारादिभिर्धर्मैः पृथिव्या लोकस्य चोपक्रियते भूतान्तराणां च। तत्राकारात्तावत् गवादीनां घटादीनां चाकारनिर्वृत्तिः गौरवादेषामवस्थानम्। रौक्ष्यादपां संग्रहौ वैशद्यं च भूतानाम्। वरणादनभिप्रेतानां छादनम्। स्थैर्याद् वृत्तिः प्रजानां भूतान्तराणां च। स्थितेर्मात्रादिसन्निधानाद्यनुग्रहः। भेदाद्धटादिनिष्पत्तिः। व्यूहश्चावयवानाम्। क्षान्तेरुपभोगयोग्यता। कृष्णच्छायत्वाद्रात्रिसम्पच्छायाकार्यप्रसिद्धिश्च। सर्वोपभोग्यत्वात्सर्वभूतानुग्रहः। एवं स्नेहादिभिर्लोकस्योपकारः क्रियते भूतान्तराणां च। स्नेहाद्रूपसंपद्वायुप्रतीकारोऽग्निशमनं संग्रहश्चपृ-

थिव्याः। सौक्ष्म्यादनुप्रवेशः। शौक्ल्याच्चन्द्रादिनिर्वृत्तिः। मार्दवात्स्नानावगाहनमेकक्रिया कठिनानां। चावनामनम्। गौरवात्सन्तानाच्च भूतानुग्रहार्थं स्रोतस्त्वम्। शैत्यादुष्णप्रतीकारः। रक्षातः प्रजासु घोरशमनम्। पवित्रत्वाद्धर्मोपचयः शौचविधिरलक्ष्योपघातश्च। सन्तानाद्द्रव्यसंघातः। तथोर्ध्वगत्यादिभिर्धर्ममात्रैस्तेजसा लोकस्य चोपक्रियते भूतान्तराणां च। ऊर्ध्वगतेः पाकप्रकाशसिद्धिः। पावकत्वाद् द्रव्यशौचं च। दाहकत्वात्क्षारोत्पत्तिः।, शीतप्रतीकारो नभसश्चोष्णत्वं शब्दनिष्पत्यर्थम्। पाचकत्वात्स्वेद्य स्वेदनमन्नपक्तिः पृथिव्यवयवानां क्रियायोग्यता, तथा बाह्यान्तरपरिणामः, रसलोहितमांसस्नाय्वस्थिमज्जाशुक्राणां लाघवाद् दाह्यातिक्रमः। भास्वरत्वाद् द्रव्यान्तरप्रकाशनम्। प्रध्वंसित्वाद् दग्धपक्वानामुपभोगः। तैजसः प्रजापालनम्। तथा तिर्यक्पातादिभिर्धर्मैर्वायुना लोकस्य चोपकारः क्रियते भूतान्तराणां च। तिर्यक्पाताद् दृष्टिविक्षेपो गन्धसंवहनं च। पवित्रत्वात्पूतिद्रव्यपवनम्। आक्षेपनोदनाभ्यामुत्कर्षः प्रथनं घर्माम्भसः। व्यूहश्च शरीरे रसादीनां धातूनां च। अग्नेश्चोपध्मानमभिघातश्चाकाशस्य। बलात्समीकरणं सर्वेषाम्। रौक्ष्याद्विशोषणम्। अच्छायत्वादहोरात्रप्रसिद्धिः। शैत्यादुष्णप्रतीकारः। तथा सर्वतोगत्यादिभिर्धर्मैर्नभसा लोकस्योपकारः क्रियते भूतान्तराणां च। सर्वतोगतेः समन्तात्तुल्यदेशश्रवणनामेकश्रुतित्वम्। अव्यूहविष्कम्भाभ्यां सर्वेषामवकाशतादानमित्युक्ताः पृथिव्यादयः। एते विशेषा इत्युच्यन्त इति।

Through the qualities like shade found in the earth, etc., a favour is rendered to whole (material) world and the substances. Due to form there is the accomplishment of the shape in the pot, cow, etc. and their sustenance (present at one place) is due to their heaviness. Through roughness is the collection of water and the distinctness in the objects. Through the quality of covering there is the covering of undesirable (things). Through firmness is the existence of the public as also of the other beings. Through stability is the favour for quantity, and gathering together, etc. Through partition is the origination of pot, etc., and also the joining of the parts. Through resistance is the capability for enjoyment.[8] Through the black shade is the accomplishment of the night as also the common awareness of the effects of shade. Since it is enjoyable to all, it renders favour to all the beings. In this way by lubricity, etc., also there is rendered service to the world and also to all the beings. Through lubricity is the accomplishment of the form, prevention from the air, extinguish of the fire, and putting together as the earth (i.e. earthly things). Due to its being subtle is its entrance (in other object). Due to its brightness is the production of the Moon, etc., (form it).[9] Through softness is accomplished the act of bathing and diving as also the bowing of the hard things. There is a flow (in the water) for the favour to the beings through its heaviness and continuous flow. Through coldness (in water) is the prevention from heat. Through its purity is the accumulation of the virtues, the procedure of purifying and the

destruction of the unseen.[10] Through the continuous flow is the collecting together of the substances. Similarly, through the qualities like going upward, etc., the fire renders favour to the world as also the beings.[11] Through the (tendency of) going upward is the accomplishment of cooking and giving light. Through its purity is rendered the purity of the substances. Through the burning is the production of acid as also the prevention from cold, and also the heat in the sky for the purpose of the production of the word there. Through its having the power of cooking there is perspiration of what is to be treated by suborific means, the digestion of food, the capability of activity in the parts of the earth and the modification– outer and inner. Due to lightness the acid, blood, flesh, arteries, bones and semen virile transcending the things liable to be burnt. Through its brightness is the illumination of the other objects. Due to its being a destroyer is the enjoyment of burnt and cooked. Through light is the preservation of the people. Similarly, through the qualities like transverse movement, etc., is the favour rendered to the world as also to the beings by the air. Through transverse movement is the casting of galance and the carrying of the odour. Through its purity is the purification of the pure substances. Through removing and impelling is the going up and the spread of the heat and the water as also the collection of fluid and the (solid) ingredient in the body, so are the blowing of the fire and striking in the sky. Through the inspiring is the assimilation of everything. Through roughness is drying of the objects. Through its covering is the accomplishment of day and night. Through coldness is the prevention from the heat. Through the quality of all-pervasiveness, etc., is rendered by the sky the favour to the world as also to the beings. Through the all-pervasiveness there is the hearing of the same sound from all directions in case of those the ears of whom are situated at the same place. Through non-obstruction and fixity is the allotment of the space for all. Thus, are stated the (gross elements like) earth, etc. These are called specific.

(Cause of terming gross elements specific)

आह, कथं पुनरेते विशेषा इत्युच्यन्ते ?

Opponent : Why are they called specific ?

यस्मात्

**शान्ता घोराश्च मूढाश्च ॥ ३८ ॥**

तत्र शान्तास्तावत् स्वसंस्कारविशेषयोगात्तत्सन्निधौ प्रसादादिधर्मोत्पत्तेः। घोरास्तु शेषादिधर्मनिमित्तत्वात्। मूढाश्च वरणादिधर्महेतुत्वात्। तन्मात्राणि पुनरशान्तघोरमूढानि

अतोऽविशेषा इत्युच्यन्ते । तदेते यथा व्याख्याता अविशेषा विशेषाः पुरुषार्थसिद्धयर्थं बहुधा व्यवतिष्ठन्ते । कस्मात् ? न ह्येतेषामेकधाऽवस्थाने पुरुषार्थः सिद्धयतीति ॥ ३८ ॥

Because :

**(THEY ARE) CALM TERBULENT AND DELUDING**

They are calm because there is the origination of the qualities like calmness in the vicinity of them due to the particular impression of ones own.[10] They are turbulent because they are the causes of the qualities like remainder (?). They are deluding because of their being the cause of the quality of covering, etc. The subtle elements, however, are not calm, turbulent and deluding and, hence, are called non-specific. The above mentioned specific and non-specific as explained earlier are present variously for the accomplishment of purpose of conscious entity.

Why ?

Because the purpose of the conscious entity is not accomplished if they are placed in a homogeneous form.

# KĀRIKĀ 38

1. The 'subject of effect' here refers to the objects of the senses, which are stated to be ten in kārikā 32.
2. Cf. kārikā 22.
3. Thus etymologically aviśeṣa means having no inter differentiations.
4. I.e. the one gross element from one subtle element, first from the first and so on.
5. The view of the Yuktidīpikā about the nature of the subtle elements is worth noting. Here, the succeeding subtle element is said to possess the qualities of the preceding subtle element.
6. For example, if there is some smell in water or air, it should not be understood as their inherent quality, but belongs to the part of earth mixed in them.
7. The qualities of cause are found in the effect also. In the objects like cow all these qualities are available because they are composed of all these elements. These mutually favour each other and are not contradictory because they are found together.
8. According to the Sāṁkhya philosophy every object is composed of three constituents. Rajas is always active and stimulating and, hence, always brings the change in the objects. If the resistence to this change is not by tamas, no object would subsist even for a short time and it would not be enjoyed.
9. Since the moon gives pleasant cool touch, and is bright, it is inferred to be abounding in water as its components.
10. Since water is purifying, the water at the sacred places purifies the beings which again leads to virtue and destroys sins.

# KĀRIKĀ 39

(States of specific objects)

आह, अतिसामान्योक्तमिदमित्यतो न प्रतिपद्यामहे । तस्माद्वक्तव्यं कथं विशेषाणामवस्थानमिति ?

**Opponent: It is stated in a very general form and, hence, we do not understand it. Therefore, it should be stated as to what is the condition of the specifics.**

उच्यते–

**सूक्ष्मा मातापितृजाः सह प्रभूतैस्त्रिधा विशेषाः स्युः ।**

तत्र सूक्ष्मा नाम चेष्टाश्रितं प्राणाष्टकं संसरति । मातृपितृजास्तु द्विविधाः । जरायुजा अण्डजाश्च । तेषां कोशोपहृताः कोशाः लोमरुधिरमांसास्थिस्नायुशुक्रलक्षणः । तत्र लोमरुधिरमांसानां मातृतः सम्भवः । अस्थिस्नायुशुक्राणां पितृतः । तत्रैवाशितपीताध्यासा दष्टौ कोशानपरे व्याचक्षते ।

Proponent : THE SPECIFIC IS THREEFOLD–SUBTLE (BODY), THOSE BORN OF PARENTS, ALONGWITH THOSE OF THE OTHER BEINGS.

Out of these subtle are eight prāṇas located in the substratum of the physical activities which transmigrate (to some other body).[1] Those born of the parents are of two kinds: those originating from the womb or those originating from the egg.

There are the sheaths of them put in other sheaths -hair, blood, flesh, bones, arteries and semen virile. Out of these the origination of hair, blood and flesh is from the mother, and that of the bones, arteries and semen virile from the father. Some others speak of eight sheaths on account of superimposing the (nature of sheaths) on what is eaten and drunk.

(The specific work as sheaths)

कथं पुनरेषां कोशत्वम् ?

**Opponent : How are these known as sheaths ?**

